ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 17

सम्पादक

एस० रिनपोछे
निदेशक

एस० एस० बहुलकर
योजना निदेशक




दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी

बुद्धाब्द २५३८ | बुद्ध पूर्णिमा | ख्रीस्ताब्द १९९४

―

# Dhīḥ

## Journal of Rare Buddhist Texts Research Project

17

*Editors*

**S. RINPOCHE**
**Director**

**S. S. BAHULKAR**
**Project Director**



**RARE BUDDHIST TEXTS RESEARCH PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**
**B. E. 2538** **BUDDHA PŪRṆIMĀ** **C.E. 1994**

Vol. XVII, 550 Copies, 1994

*Price* : Rs. 60,00



*Published by* :
Central Institute of Higher Tibetan Studies,
Sarnath, Varanasi-221 007

*Printed by* :
Shivam Printers
C. 27/273, Indian Press Colony
Maldahiya, Varanasi-221002

# धी: XVII

## विषयानुक्रमणी





भवशमसमसङ्गा भग्नसंकल्पभङ्गीः

खमिव सकलभावं भावतो वीक्षमाणाः ।

गुरुतरकरुणाम्भःस्फीतचित्ताम्बुनाथाः

कुरुत कुरुत देव्यो मय्यतीवानुकम्पाम् ।।

( अभिसमयमञ्जरी, पृ० 20 )

# श्रीवज्रयोगिनी-स्तुतिप्रणिधानम्

## सिद्धाचार्यविरूपादविरचितम्

[ यह स्तोत्र गुह्यसमयसाधनसंग्रह से लिया गया है। इस संग्रह का विवरण 'धीः' अंक 1 में प्रारम्भ में ही दिया जा चुका है। ]

ॐ आ हूँ इति कायवाक्चित्त-इन्द्रियविज्ञानानि । वाक्चित्तानि मनोविज्ञानानि । परचित्तज्ञानाभिज्ञा । परकायप्रवेशाभिज्ञा । पुण्डरीकेषु नाभिस्थे रक्तसूर्यमण्डलः ॥ १ ॥

धर्मोदया पद्ममध्ये सिन्दूरारुणरूपिणी ।
त्रिशृङ्गा हि त्रिकोणा वा चतुःपीठसमन्विता ॥ २ ॥

ह्रींकारो मध्यभागेऽस्याः पीतवर्णः प्रकीर्तितः ।
तद्भूवा पीतवर्णा च अवधूत्या(ती) स्वयं स्थिता ॥ ३ ॥

ललनायां तु सुश्यामा रसनायां च गौरिका ।
प्रत्यालीढपदा नाम्ना मध्ये पीता मनोरमा ॥ ४ ॥

त्रिमार्गे संस्थिता देवी त्रिकायवज्रयोगिनी ।
सेयं नाम्ना भवेदेका सर्वसंबुद्धडाकिनी ॥ ५ ॥

त्रैलोक्ये दिव्यरूपा च सर्वाशापरिपूरिका ।
स्वकर्तिना कर्तितं च वामहस्ते स्वमस्तकम् ॥ ६ ॥

दक्षिणेऽस्याः स्थिता कर्तिर्जगतो दुःखच्छेदिनी ।
अस्या वामे स्थिता श्यामा नाम्ना सा वरवर्णिनी ॥ ७ ॥

क(ख)र्परः सव्यहस्ते च कर्तिर्वामे च संस्थिता ।
दक्षिणे चैव पीता वै वज्रवैरोचनी स्थिता ॥ ८ ॥

कर्तिका दक्षिणे हस्ते वामे कपालधारिणी ।
प्रत्यालीढपदा देवी नग्निका तु विशेषतः ॥ ९ ॥

करौ च द्वौ तयोः पादौ विपरीतौ तथा स्थितौ ।
बुद्धानां जननी मध्या सम्यक्सम्बुद्धरूपिणी ॥ १० ॥

अक्षया सुभगा नित्यं हन्त्री च मृत्युजन्मनोः ।
धर्मसंभोगनिर्माणमहासुखस्वरूपिणी ॥ ११ ॥

सेयं त्रिभुवने देवी राजते चन्द्रवत् सदा।
कबन्धादवधूत्याश्च प्रविशेत् स्वमुखेष्वसृक् ॥ १२ ॥

ललनारसनाभ्यां च निःसृत्य शिरसि तथा।
करुणारक्तरूपेण पिबन्ती सर्वशान्तये ॥ १३ ॥

दुःखं संप्रेक्ष्य लोकानां चतुर्मारनिषूदिनी।
दौर्मनस्यादि कर्त्या च कर्तन्ती सर्वमेव तत् ॥ १४ ॥

स्तुता हि जिनमातस्त्वं सुप्रसीद भवार्णवे।
स्वार्थं कर्तुं परार्थं च भवाम्यहं यथा क्षमः ॥ १५ ॥

तत् त्वया देवि कर्तव्यमनुग्रहं मयि सृज।
बालोऽहमज्ञरूपी च कायवाक्चित्तदोषतः ॥ १६ ॥

गुरुभक्ति न जानेऽहं त्वद्भक्ति च विशेषतः।
इत्याकलय लोकेशि कृपा मयि विधीयताम् ॥ १७ ॥

कायवाक्चेतसां साम्यं कुरु मे त्वं प्रसादतः।
येन मुञ्चामि संसारं षड्गतिं न विशाम्यहम् ॥ १८ ॥

यथा च वज्रवद्देहो यावन्मुक्तो भवाम्यहम्।
मारैः सर्वैः परित्यक्तो यथा कायो भवेन्मम ॥ १९ ॥

लीलया सिद्धिभागाः स्युर्निर्विघ्नः सर्वसिद्धिभाक्।
सर्वसाधनसिद्धिः स्यात् कायश्चैवाजरामरः ॥ २० ॥

त्रासनं सर्वमाराणां सर्वाशापरिपूरणम्।
देहि मे त्वं वरां सिद्धि हित्वा चैव गमागमम् ॥ २१ ॥

मनो विलीयतां देवि पञ्चेन्द्रियानुसंयुतम्।
सिद्धयेच्च वज्रसत्त्वायुर्यौवनारोग्यसत्सुखम् ॥ २२ ॥

त्वत्प्रसादान्महामुद्रा सर्वेषामेव संभवेत्।
देवासुरमनुष्याश्च यत्र यत्र च संस्थिताः ॥
सुखिनस्ते च सर्वे स्युर्बुद्धत्वफललाभिनः ॥ २३ ॥

श्रीगुह्यसमयतन्त्रे त्रिकायवज्रयोगिन्याः स्तुतिप्रणिधानं समाप्तम् ॥

कृतिरियं सिद्धाचार्य श्रीविरूपादानाम् ॥

# वज्रविलासिनीसाधनस्तवः

[ यह स्तोत्र प्रकीर्ण पत्रों से उपलब्ध हुआ है। यह वसन्ततिलका की टीका 'रहस्यदीपिका' में भी 'उक्तं च' कहकर उद्धृत किया गया है। ]

रविविकस्वरभास्वरसुन्दरी-
प्रबलकेशरसंवरकर्णिकात्।
उदयमस्तकशृङ्गसमुल्लसन्-
नवसुपूर्णशशाङ्ककराङ्किताम् ॥ १ ॥

विविधपुष्परसासववेद्यपि
द्रुतविलम्बितमध्यनदद्ध्वनिः।
अलिरुपेत्य निशार्धमहोत्सवे
धयति तद्गतधोरिति विस्मयः ॥ २ ॥

उदयतेऽस्तमुपैति निशाकरः
पुनरतोऽप्युदयाचलमौलिताम्।
उभयकोटिकलापिनिरीक्षणे
न च शशो न विभाति दिवाकरः ॥ ३ ॥

रविरुदेति सरोजदलान्तरे
शिखरतोऽपि विधुः प्रविलीयते।
व्रजति चोर्ध्वमसौ वडवानलो
गिलति राहुरधः शशिभास्करौ ॥ ४ ॥

कमलिनीकमलासनलोचन-
प्रकटगोचरगोचरमीलनम्।
प्रथममङ्गमिदं कुलिशाम्बुज-
द्वयनिमीलनमत्र ततोऽपरम् ॥ ५ ॥

सपदि साधकबीजनिघर्षणात्
त्रितयमम्बरमेति चतुर्थकम् ।
सहजमक्षयधामकलावली-
कलितकालविलापनलेलिहम् ॥ ६ ॥

यदि सुशिक्षितवज्रविलासिनी-
गुरुमुखाधिगमोऽधिगतो भवेत् ।
भवति यस्य तदोत्तममध्यमा-
धमविनिश्चयमेति स तत्त्वदृक् ॥ ७ ॥

श्रीवज्रविलासिनीसाधनस्तवः समाप्तः ॥

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ प्रस्तुत अंक में 1. सिद्धाचार्य शबरपाद का **योगिनीसर्वस्व** नामक ब्रजविलासिनी साधन, 2. भट्टरत्नाकर का **पञ्चाकार** और 3. अज्ञात लेखक की **पञ्चाकाराभिसंबोधि**, इन तीन लघुग्रन्थों को पूर्णतः प्रकाशित किया जा रहा है । ]

## सिद्धाचार्य शबरपाद

चौरासी सिद्धों में आचार्य शबरपाद का नाम सम्मान पूर्वक लिया जाता है । अभयदत्त प्रणीत 'चौरासी सिद्धों का वृत्तान्त' नामक ग्रन्थ में लिखा है कि ये पूर्व में शबरपा नामक आखेटक ( शिकारी ) थे । अत्यन्त प्राणिवध करते देखकर आर्यलोकेश्वर ( बोधिसत्त्व ) को उनके प्रति अगाध करुणा उत्पन्न हुई और उस प्रचण्ड हिंसक मनोवृत्ति के दमन हेतु आर्यलोकेश्वर ने एक ठीक वैसे ही शबरपा का निर्माण किया, जिसकी चामत्कारिक शक्ति से प्रभावित होकर आखेटक शबरपा ने आखेट करना छोड़ दिया और उन्हें सांसारिक व्यवहारों के प्रति घृणा तथा धर्म में अटूट श्रद्धा उत्पन्न हो गई । तब आर्य अवलोकेश्वर ने उन्हें स्वयं उपदेश किया और 12 वर्षों तक महावरुण की भावना के फलस्वरूप उन्हें सिद्धि प्राप्त हुई ।[1]

कहते हैं कि इन्होंने सर्वप्रथम आर्य नागार्जुन से संवर ग्रहण किया था । कुछ लोग सरहपाद को इनका गुरु बताते हैं । गुरु के आदेशानुसार संसार के असंख्य प्राणियों के कल्याणार्थ ये श्रीपर्वत के चित्तविश्राम नामक स्थान में मैत्रेय बुद्ध के शासन का उदय होने तक इसी देह से ( निर्माणकाय से ) वर्तमान रहेंगे । लोगों का विश्वास है कि आज भी सच्ची श्रद्धा से कोई शबरपाद का दर्शन चाहे तो श्रीपर्वत पर वे प्राप्त होते हैं । उनके सम्बन्ध में यह श्लोक प्रसिद्ध है—

नेदं धनुर्न च मृगा न वराहपोतः
सम्पूर्णचन्द्रवदना न च सुन्दरीयम् ।
निर्माणनिर्मिततयाऽर्थिजनस्य हन्त
संतिष्ठते गिरितले शबराधिराजः ॥

---

1. देखें—चौरासी सिद्धों का वृत्तान्त, केन्द्रीय उच्च ति० शि० संस्थान सारनाथ, पृ० 11.

इनके द्वारा निर्मित निम्नांकित ग्रन्थों की सूचना मिलती है—

1. योगिनीसर्वस्व ( गुह्यवज्रविलासिनीसाधन )
2. वज्रयोगिनीसाधन
3. विद्याधरी वज्रयोगिनी आराधनविधि
4. अधिष्ठान महाकालसाधन
5. सुगतशासनरत्नबोहित्था
6. वज्रविदारणधारिणीवृत्तिरत्न
7. वज्रयोगिनीयाभिषेकसंक्षेप
8. वज्रवाराहीसाधन

इनमें वज्रयोगिनी आराधनविधि साधनमाला भा० २, पृ० 456 में प्रकाशित है। योगिनीसर्वस्व नामक वज्रविलासिनीसाधन का संक्षिप्त परिचय 'धीः' के अंक 1 में गुह्यसमय-साधनसंग्रह के विवरण में दिया गया था। ग्रन्थ की महत्ता और उपयोगिता की दृष्टि से यहाँ हम उसे पूर्णतः प्रकाशित कर रहे हैं।

**ग्रन्थ**—योगिनीसर्वस्वम् ( गुह्यवज्रविलासिनीसाधनम् )

**ग्रन्थकार**—सिद्धाचार्य शबरपाद

**संख्या**—डी० एच० 332

**पत्रसंख्या**—8 ( 29–36 ), **पंक्ति प्र० प०**–7, **अक्षर प्र० पं०**–68.

**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

# योगिनीसर्वस्वम्

## सिद्धाचार्यश्रीशबरपादानाम्

**ॐ नमः श्रीवज्रविलासिन्यै।**

यस्मिन् सुरासुरसुरेन्द्रनरेन्द्रवृन्दास्तत्पादपद्मपतिता भ्रमराः शिरोभिः।
तं सिद्धिसाधनपयोधिमहानिधानं श्रीलोकनाथचरणं शरणं व्रजामि ॥ 1 ॥

या श्रीवज्रविलासिनी भगवती सम्भोगभक्त्याद्भुतं
नित्यानन्दमहोत्सवं वितनुते निर्वाकिपीतांशुका।
सत्त्वानां तथतैव विग्रहवती चातीव रागोज्ज्वला
तस्याः पादयुगं जगज्जयकरं वन्देऽभिवन्द्योत्तमम्॥ 2 ॥

न श्रुतं न पठितं किञ्चिच्छबरेणाद्रिचारिणा ।
लोकनाथाधिपत्येन वदेयं कियदक्षरम् ॥ 3 ॥

सर्वरत्नमये रम्ये गन्धमृगसुगन्धिनि ।
मनोभङ्गपदं दत्त्वा चित्तविश्रामपर्वते ॥ 4 ॥

तत्प्रदेशे महारम्ये सुगन्धिकुसुमाश्रये ।
लसत्कन्दरमाकन्दमन्दकूजितकोकिले ॥ 5 ॥

रक्ताशोकघनोद्याने ममाशोकाष्टमीतिथौ ।
गुरुणा करुणाङ्केन देशितेयं विलासिनी ॥ 6 ॥

यथाविधि समाचारैरेकचित्तसमाधिना ।
शबर्या सहचर्यायां मया साऽभिमुखीकृता ॥ 7 ॥

वश्याकर्षणस्तम्भनमारणोच्चाटनानि च ।
अञ्जनं गुटिकासिद्धिस्तथान्यानि बहूनि च ॥ 8 ॥

महामुद्रापदं लब्ध्वा वाचा संयाचितं मया ।
विधिना भावयेद् यस्त्वां तस्मै दास्यसि तत्फलम् ॥ 9 ॥

भगवता यथोद्दिष्टं साधनं बोधिसाधनम् ।
तस्याः संक्षेपतः सारं लिखेल्लब्धनिमित्तकः ॥ 10 ॥

लोभकाया(मा)दियुक्तानां तीर्थिकानां विशेषतः ।
हिंसाभिः क्रूरचित्तानां न देयं साधनोत्तमम् ॥ 11 ॥

बुद्धतीर्थिकसत्त्वानामपरिपाचितचेतसाम् ।
विगमदिव्योन्मत्तानां न देयं साधनोत्तमम् ॥ 12 ॥

खञ्जकुब्जादिघण्टा(षण्ढा)नां व्याधिदुःखितचेतसाम् ।
एतेषां नरनारीणां न देयं साधनोत्तमम् ॥ 13 ॥

लब्धाभिषेकशुद्धाय बहुज्ञाय कृपालवे ।
शान्तकान्तकृतज्ञाय प्रदेयं दिव्यसाधनम् ॥ 14 ॥

गुर्वाराधनतुष्टाय गुह्यविश्वासरक्षिणे ।
हीनोद्धरणचित्ताय प्रदेयं दिव्यसाधनम् ॥ 15 ॥

सत्त्वार्थहितयुक्ताय कारुण्यबोधिकाङ्क्षिणे ।
नरनारीजनायेदं प्रदेयं दिव्यसाधनम् ॥ 16 ॥

आदौ सिद्धिविधिं ज्ञात्वा गुर्वाराधनपूर्वकम् ।
गुरुवाक्यामृतैस्तृप्तस्ततः साधनमारभेत् ॥ 17 ॥

पर्वतादिगुह्य(हा)मध्ये सुगन्धिकुसुमाश्रये ।
भावनीया सका( सुशा )न्तेन गुह्यवज्रविलासिनी ॥ 18 ॥

शून्यवेश्मनि स्वच्छन्दमुद्याने विजने वने ।
पूजनीया सदा देवी साधनीया यथाविधि ॥ 19 ॥

आदावुद्वर्तनं कुर्यात् सुगन्धकुसुमादिना ।
क्षालयेद् गुह्यवज्रं च मन्त्रविद्याविशेषतः ॥ 20 ॥

नेत्रयोरञ्जनं कार्यं केशवेशं च शोभनम् ।
विद्यया तच्च कर्तव्यं निजलावण्यहेतवे ॥ 21 ॥

पद्मपाणितलं कुर्याद् बाहुमूलयुगं तथा ।
सुखस्पर्शं सदामोदि सुखसौभाग्यहेतवे ॥ 22 ॥

प्रवालकान्तमधरं [ भालं ] सिन्दूरराजितम् ।
ललाटे लाक्षकारेखां कर्णं वाऽशोकभूषितम् ॥ 23 ॥

त्यक्त्वाऽन्याभरणान्येषा मुक्ताहारप्रलम्बिनी ।
साधकोऽपि वरं रूपं पद्मनर्तेश्वरस्य च ॥ 24 ॥

कृष्टं मदनमासाद्य सुखाद्यं विद्यया सह ।
तावन्मात्रं तु कर्तव्यं न मनो विकलं यथा ॥ 25 ॥

द्वयोर्द्वयोश्चतुर्दश्यां तथाष्टम्यां विधानतः ।
रात्रावेवार्चयेद् देवीं मासे वारचतुष्टयम् ॥ 26 ॥

प्रदीपं ज्वालयेत् तत्र प्रभाकरसमप्रभम् ।
यथा प्रकाशते विश्वं(बिम्बं) प्रत्यङ्गं च विशेषतः ॥ 27 ॥

सिद्ध्यर्थमुपविश्याथ सत्त्वार्थकृतचेतसा ।
महामुद्रापदं गन्तुं सर्वबुद्धसमाहितः ॥ 28 ॥

लज्जादिकं परित्यज्य कोपलोभादिकं तथा ।
अणुमात्रां घृणां शङ्कां दूरतः परिवर्जयेत् ॥ 29 ॥

सुखासन[समा]सीनो विवासा मुक्तकुन्तलः ।
स्वजङ्घां [कि]ञ्चिदाकुञ्च्य दक्षिणाङ्गुलं प्रसारयेत् ॥ 30 ॥

तयोर्मध्यगतां विद्यां निवसनां मुक्तकुन्तलाम् ।
[तथा] लावण्यसम्पन्नां कुर्यात् तु सुपरिचिताम् ॥ 31 ॥

मधो(ध्ये) मचूलकं दत्त्वा त्यक्तपद्मोत्कटासनाम् ।
देवीबाहुद्वय[मिव] तस्या बाहुद्वयं चरेत् ॥ 32 ॥

तस्या धर्मोदयापन्ने कृत्वा वर्तुलमण्डलम् ।
वामकरामृताङ्गुल्या कुङ्कुमै रक्तचन्दनैः ॥ 33 ॥

तदनु धर्मोदयाकारं तत्रैव मण्डलं चरेत् ।
एतन्मण्डलमन्त्रं तु मन्त्रोद्धारेऽस्ति भाषितम् ॥ 34 ॥

एतन्मन्त्रं समुच्चार्य सीत्कारं च समुच्चरेत् ।
आद्यक्षरेण मन्त्रेण दद्यात् पुष्पं सुमध्यके ॥ 35 ॥

शून्यतां भावयेद् योगी चतुर्ब्रह्मविहारिणः ।
ॐ शून्यतादिकं मन्त्रं मनसोच्चारयेत् ततः ॥ 36 ॥

देव्याः पञ्चाक्षरं मन्त्रं पञ्चस्थानेषु विन्यसेत् ।
शिरोवदनचित्तेषु नाभौ वज्रे त्रिधा क्रमम् ॥ 37 ॥

पञ्चस्थानेषु विद्याया यथारोपितमात्मनः ।
तथा मन्त्रार्चनं कुर्याद्धित्वा शून्यतादिमन्त्रकम् ॥ 38 ॥

अथोदयमहारागं भावयेत् सूर्यमण्डलम् ।
विततं सुमनोरम्यं रक्ताकारं समुज्ज्वलम् ॥ 39 ॥

तत्र धर्मोदयां ध्यात्वा रक्ताद्यक्षरसम्भवाम् ।
मनोह्लादकरीं पीतां क्षरल्लाक्षाद्रवोज्ज्वलाम् ॥ 40 ॥

सर्वकामसुखाधारां स्फुरदंश्वब्जविभ्रमाम् ।
धर्मसंभोगनिर्माणसर्वाकारविलक्षणाम् ॥ 41 ॥

अभिणयादयो (?) रक्तं जगच्चन्द्रार्कमिश्रितम् ।
भगगर्भस्थितं पश्येत् भ्रमन्तं चक्रसन्निभम् ॥ 42 ॥

तस्योपरि महाबीजं तप्तकाञ्चनविग्रहम् ।
पञ्चाक्षरमहामन्त्रं ज्वलन्तं कल्पवह्निवत् ॥ 43 ॥

रक्तं चानलमालाभिर्व्यापयन्तं जगत्त्रयम् ।
व्याप्ताकनिष्ठलोकाभिश्चिन्तयेद् बिम्बं विलक्षणम् ॥ 44 ॥

द्रवीभूतं जगत्सर्वं विशन्तं तत्र मण्डले ।
द्रष्टव्यं वशगं विश्वं सत्त्वानां कृतचेतसाम् ॥ 45 ॥

एतत्परिणतां देवीं बन्धूककुसुमप्रभाम् ।
रक्त(तप्त)हेमोज्ज्वलां गौरीं निजलावण्यभूषिताम् ॥ 46 ॥

नवयौवनसम्पन्नां कर्णे चाशोकशोभिताम् ।
ललाटे लाक्षकारेखां मुक्ताहारविलम्बिनीम् ॥ 47 ॥

सर्वलक्षणसम्पूर्णामन्यालङ्कारवर्जिताम् ।
अभिवाञ्छितसौभाग्यां नग्नां विमुक्तकुण्डलाम् ॥ 48 ॥

पद्मनर्ते ध्वजोच्छ्रायसमारोपितपङ्कजाम् ।
उत्कटासननृत्यस्थां कटाक्षस्मितभङ्गुराम् ॥ 49 ॥

वक्रीकृतोद्धृतभुजां वज्रकर्तिकरोद्यताम् ।
वामे पाशधरासारां लीलान्दोलितमेखलाम् ॥ 50 ॥

परिरम्भकराह्लादैः पद्मनर्तेश्वरात्मिकाम् ।
उल्लसद्भिर्दुरस्पर्शैः क्षरत्कमलविभ्रमाम् ॥ 51 ॥

नितम्बजघनास्फालरणज्जृम्भितराजिताम् ।
स्फुरदाकुञ्चयोगेन वडवावच्चमत्कृताम् ॥ 52 ॥

रक्तरश्मिघटाजालै रञ्जयन्तीं जगत्त्रयम् ।
तामेवाग्रस्थितां विद्यां ध्यायाद् वज्रविलासिनीम् ॥ 53 ॥

एकदैव समुद्भूतं समबीजसुखाङ्कुरम् ।
पद्मनर्तेश्वरं बीजं पद्मरागरजोबलम् ॥ 54 ॥

अभिव्यञ्जितरोमाग्रं सहजासक्तचेतसम् ।
सर्वलक्षणसम्पूर्णं द्विरष्टवर्षविग्रहम् ॥ 55 ॥

नवयौवनसम्पन्नं कर्णे चाशोकशोभितम् ।
सुवर्णतिलकारेखं मुक्ताहारावलम्बितम् ॥ 56 ॥

निजलावण्यसम्पन्नमन्यालङ्कारवर्जितम् ।
महारागरसाधारं मुक्तकेशं दिगम्बरम् ॥ 57 ॥

वामकुञ्चितया किञ्चिद्वितत्तं दक्षिणाङ्गया ।
जङ्घया सुरताचार्यं किञ्चिदुत्तानशायिनम् ॥ 58 ॥

स्वकुर्या(कट्या)र्पितबाहुभ्यां भक्त्यालिङ्गनमुद्रकम् ।
सुव्यक्तं गुह्यवज्रेण नर्तयन्तं विलासिनीम् ॥ 59 ॥

पीतपद्मधरं वामे दक्षिणे वज्रधारिणम् ।
आलिङ्ग्यन्तमाचुम्बं मुहुराबद्धलीलया ॥ 60 ॥

कुर्वन्तमतिरागेण सुरतं वाजिकूजितम् ।
सहजानन्दसुखास्वादैरर्धोन्मीलितलोचनम् ॥ 61 ॥

इत्येवंभूतमात्मानं भावयेत् सुरतेश्वरम् ।
महासुखमिवाव्यक्तं पद्मनर्तेश्वरं विभुम् ॥ 62 ॥

अतोऽस्या महादेव्यास्तप्तकाञ्चनरश्मिभिः ।
मिथः समरसीभूय त्रैलोक्यं रुधिराम्बुधिम् ॥ 63 ॥

तन्मध्ये स्थितमात्मानं देव्या सह विनोदिनम् ।
महारागसुखायातं त्रैलोक्योदरवर्तिनम् ॥ 64 ॥

तदनु चिन्तयेत् तूर्णमभिषिञ्चन्ति मां पुरः ।
तथागता लोकपालाः किन्नरासुरमानवाः ॥ 65 ॥

रम्भा तिलोत्तमा चैव नाना चाप्सरसोगणाः ।
पुष्पधूपादिभिर्वाद्यैर्नानानृत्यमहोत्सवैः ॥ 66 ॥

अथ मण्डलपूजां च कारयेत् त्रययोगतः ।
कायवाक्चित्तपूजाभिस्त्रयं कर्म विशोधयेत् ॥ 67 ॥

मूलमन्त्रं समुच्चार्य देव्या नाम समुच्चरेत् ।
स इत्युच्चारणं कृत्वा पूजयेद् गुह्यमण्डलम् ॥ 68 ॥

वामवृद्धामृताभ्यां तु धृत्वा पुष्पफलादिकम् ।
दातव्यं समरसं सर्वं वारत्रयमनाविलम् ॥ 69 ॥

स्वकायं कुलिशं तद्वत् संपूज्य ललितोन्नतम् ।
तेनैव मन्त्रजापेन देव्या मन्त्रं प्रपूजयेत् ॥ 70 ॥

ललाटं लोचने कण्ठं घ्राणं गलद्वयं तथा ।
ओष्ठकण्ठौ हृदयं च स्तनौ कक्षौ विचक्षणः ॥ 71 ॥

नाभिपद्मं च सम्पूज्य स्वकायं चार्पयेत् तथा ।
धूपं च चारयेत् तत्र यथाविधि सुगन्धितम् ॥ 72 ॥

भगवत्याश्च कर्तव्या पद्मनर्तेश्वरस्य च ।
वज्रपीठादिपूजाऽऽदौ तेनैव क्रमयोगतः ॥ 73 ॥

ताम्बूलं च प्रदातव्यं कर्पूरादिसुपूरितम् ।
अन्योन्यं भक्षणं कृत्वा गाथापाठं ततश्चरेत् ॥ 74 ॥

महासुखप्रसन्नस्त्वमभिन्नोऽसि मया सह ।
रन्तुमालिङ्गनं देहि नर्तेश्वर नमोऽस्तु ते ॥ 75 ॥

महासुखप्रसन्ना त्वमभिन्नासि मया सह ।
रन्तुमालिङ्गनं देहि विलासिनि नमोऽस्तु ते ॥ 76 ॥

इति गाथां समुच्चार्य सम्पुटाञ्जलिकर्मणा ।
अन्योन्यवन्दनां कुर्यात् मधुराक्षरभाषणैः ॥ 77 ॥

एकबीजसमुद्भूतं प्रज्ञोपायमयं जगत् ।
सर्वनारीमयी देवी सर्वोपायमयः प्रभुः ॥ 78 ॥

अभिन्नोऽसि महाराज सहजार्थं समुद्यतः ।
एहि मेलापकं कर्तुं वज्रमुद्रामहर्द्धिकः ॥ 79 ॥

गाथाद्वयं समुच्चार्य चित्तस्मरणपूर्वकम् ।
मिथ आलिङ्गनं कुर्यान्नवपुष्पिप्रयोगतः ॥ 80 ॥

आलिङ्गनं चुम्बनं तु स्तनयोर्मर्दनं शनैः ।
दर्शनं स्पर्शनं योनेर्विकाशं लिङ्गघर्षणम् ॥ 81 ॥

प्रवेशोल्लासनं पद्मे प्रवेशस्त्रयभागतः ।
मणिमध्यसमूलैश्च नवपुष्पि प्रकीर्तितः ॥ 82 ॥

चुम्बनं तु प्रदातव्यं यत्र पुष्पैः सुपूजितम् ।
मस्तकादिपादपर्यन्तं विंशत्यङ्गसमं गतौ ॥ 83 ॥

नखक्षतं न दातव्यं पश्चात्तापनिवृत्तये ।
करजचुर्चुरास्पर्शैः प्रीणयेद् देवीविग्रहम् ॥ 84 ॥

वक्त्रासवं च पातव्यं वाजिकूजितपूर्वकम् ।
शुनीदन्तार्पणपातेन तद्वद् दंशनं शनैः ॥ 85 ॥

किञ्चिदुत्तानको भूत्वा स्थातव्यं देवमुद्रया ।
आत्मीयमुद्रया देवी भिदुराग्रेण नृत्यते ॥ 86 ॥

निश्चलात्तु सुखं बुद्ध्येदति बा(चा)लनाच्चञ्चलं मनः ।
हेलया खेलया देवीसहजासक्तचेतसः ॥ 87 ॥

रागाम्भोधिजलं तर्तुं सुना(नौ)केयमुपस्थिता।
गुरुवाक्योदयं प्राप्तं वाहयेद् वाहकस्वरैः ॥ 88 ॥

मत्वा स्थानत्रयं मर्मग्राह्योत्सर्गगतागतम्।
स्वस्वरेन्ते इयमायुर्प्पतं गिलेत खममक्षर (?) ॥ 89 ॥

मन्थानस्थानं तु बोद्धव्यं विलक्षणक्षणोदितम्।
वज्रेण क्षोभयेद् देवीं बोधिचित्तं न चोत्सृजेत् ॥ 90 ॥

उत्सृते बोधिचित्ते तु कुतस्तत्र महासुखम्।
मन्थयेत् कमलाम्भोधिसहजामृतकाङ्क्षया ॥ 91 ॥

वैराग्यकालकूटं च नोत्तिष्ठति यथा यथा।
यथोक्तभावनापूर्वं देवदेव्या रसाश्मि(त्म)कम् ॥ 92 ॥

तां भावनां भावयेद् धीमांस्त्रैलोक्यकारिणीम्।
मन्थमन्थानयोगेन निःसृतं किमपि गा(गो)लकम् ॥ 93 ॥

प्रोक्षणं तेन कुर्वीत बीजोच्चारणपूर्वकम्।
ये ये (तत्तन्)मद्यादिद्रव्येषु प्रक्षिपेत् कमलगोलकम् ॥ 94 ॥

तत्सन्तर्पणमात्रेण देवदेव्यौ प्रतुष्यतः।
कमलमध्यगतं वज्रं किञ्चिदाकुञ्च्य पाणिना ॥ 95 ॥

स्तब्धमुल्लालयेन्मन्त्री देवीतुष्टिः प्रजायते।
करवृद्धाङ्गुलिभ्यां च पद्मपक्षद्वयं शनैः ॥ 96 ॥

घटिताद्घ(तोद्घा)टितं कुर्यात् स्फरतश्च यथायथम्।
कुर्यादान्दोलनाह्लादमाकुञ्चयेच्च पङ्कजम् ॥ 97 ॥

किञ्चिन्नृत्यप्रभङ्गैश्च [स]कटाक्षस्मितैः करैः।
युगयोस्तु प्रभाजालैस्त्रैलोक्यव्यापिमण्डले ॥ 98 ॥

क्रीडमानं विलासिन्या भावयेदात्मविग्रहम्।
गन्धर्वनगराकारं मृगतृष्णाम्बुचञ्चलम् ॥ 99 ॥

तथेति भावनाभ्यासं सदा कुर्याद्विचक्षणः।
भावनाखिन्नयोगस्तु जपे[च्च] वामपाणिना ॥ 100 ॥

पञ्चाक्षरं महाबीजं सर्वबुद्धैर्नमस्कृतम्।
सप्तजन्मकृतोद्भूतं महाकिल्बिषनाशनम् ॥ 101 ॥

देवीपद्मस्थितं मन्त्रं ज्वलन्तं रक्तषट्पदम् ।
स्वनाभिदूरं(भेरुरः)प्रविश्यादौ घ्राणरन्ध्रेण निःसृतम् ॥ 102 ॥

देवीघ्राणपुटं चैव प्रविश्य कमलवर्त्मना ।
पुनर्वज्रे समायातं पश्येदायातयातकम् ॥ 103 ॥

दोलाजापोऽयमित्याहुः क्षिप्रसिद्धिकरो यतः ।
एतद्योगवरापेतो न सिद्धो भवति मुद्रया ॥ 104 ॥

एकदैवं समुच्चार्य विद्यया सह सुस्वरम् ।
नादबिन्दुलयातीतमिदं जापस्य लक्षणम् ॥ 105 ॥

शतमष्टोत्तरं जप्त्वा कुर्यादन्योन्यभूषणम् ।
वज्राब्जयोः समं तत्र मुहुर्गरुडमुद्रया ॥ 106 ॥

दशधान्दोलनं देवात् दद्यादाह्लादचेतसा ।
पुनस्तेनैव योगेन जापमारभते सुधीः ॥ 107 ॥

इत्यनेन क्रमेणैव सुजप्योऽयं यथाविधि ।
जापः पञ्चशतं यावत् समये तत्र मन्त्रिणा ॥ 108 ॥

एतज्जापावसाने तु भावयेदात्ममेलकम् ।
बोधाम्भोधिं प्रवेश्यानुत्तरफलहेतवे ॥ 109 ॥

युगनद्धमहारागोद् भूतापन्नं सप्रज्ञकम् ।
तप्तस्वर्णद्रवाकारं जगत्समरसोज्ज्वलम् ॥ 110 ॥

दक्षिणावर्तरूपेण भ्रमन्तं चक्रसन्निभम् ।
छेदयन्तं जगत्क्लेशं त्रैलोक्यस्यापि मण्डलम् ॥ 111 ॥

अशेषविषयकक्षाद् वासनामूलबृंहितात् ।
अपि भस्माणुदग्धा[च्च] शान्तिमेति द्रवानिलः ॥ 112 ॥

शक्रचापक्रमेणैव तल्लीनं गगनाम्बुधौ ।
गगनं सहजे लीनं बोधाम्भोधौ महोदये ॥ 113 ॥

अविद्यावासनाभ्यासादविद्यैव प्रहीयते ।
अतः प्रतीत्यजा भावाः स्वप्नजातमहोपमाः ॥ 114 ॥

उत्पादस्थितिनाशस्तु विकल्पात् किल जायते ।
तदादौ कल्पना नास्ति तस्माद् बोधः प्रकाशते ॥ 115 ॥

भावाभावो(वौ) निज(जे) लीन(नौ) परमार्थादिबोधतः।
यथावत्ता परं नास्ति सत्यासत्यविवर्जिता ॥ 116 ॥

इत्येवं हि समाधिस्थः सम्यगभ्यासनिश्चलः।
तदा योगी भवेत् सिद्धो महामुद्रामहर्द्धिकः ॥ 117 ॥

विद्योत्पन्नेऽशनौ पीठे कर्तव्यं मण्डलादिकम्।
वज्रपीठोद्भवो देव आत्मना च विलासिनी ॥ 118 ॥

तयोश्च पूर्ववत् सर्वं ध्यानजापादिकं तथा।
कर्तव्यं विधिना योगं प्राप्याच्चैव यथोदितम् ॥ 119 ॥

अथ यथा विहर्तव्यं समाधित्यक्तचेतसा।
स्वयं नर्तेश्वरं ध्यात्वा विद्यया च विलासिनीम् ॥ 120 ॥

नित्यं च पूजयेन्मन्त्री रात्रेर्यामे चतुर्थके।
पूर्ववद्विधिना मन्त्रं शतमष्टोत्तरं जपेत् ॥ 121 ॥

विद्यायाः सर्वथा भावः स्वस्यैव वज्रपीठके।
पूर्ववन्मण्डलं कृत्वा नित्यपूजाविधिं चरेत् ॥ 122 ॥

मुद्रापि पूर्ववत् सर्वं सूर्यधर्मोदयादिकम्।
मेलकं तादृशं देव्या ध्यायन् मन्त्री रतोत्सवम् ॥ 123 ॥

वज्रं करेण संगृह्य लालयेन्महामण्डयोगतः।
मन्त्रजापादिकं तद्वद् बोधिचित्तं न चोत्सृजेत् ॥ 124 ॥

उपायमेलकं भावे विद्यापि स्वाब्जमण्डले।
पूर्ववन्मण्डलं कृत्वा नित्यपूजाविधिं चरेत् ॥ 125 ॥

तर्जन्यङ्गुष्ठाङ्गुलिभ्यामेकीकृत्य सुयुग्मकम्।
तद्वज्राब्जनियोगेन जापध्यानादिकं चरेत् ॥ 126 ॥

य(त)दा [च] सुरताचार्यश्चतुर्योनिं चतुर्भुजाम्।
चतुरान्दोलनं दिव्यं चतुर्मुद्राविशेषकम् ॥ 127 ॥

गोपनीयं यथाचलं(चारं) मया तु खलु तस्करात्।
स्फुटाक्षरपदैरेव बीजमन्त्रो न लिखितः ॥ 128 ॥

आवादिदशान्तोऽयं लीकारो अनुमस्तकः।
झान्तो वहति रीकारं रुकारं वश्च लीयरः ॥ 129 ॥

एष पञ्चाक्षरो मन्त्र इन्दुबिन्दुविभूषितः ।
एँ आँ रीँ रँ ब्रीँ ।
इति मन्त्रः सर्वकामफलदो जाप्यो यथाविधि ॥ 130 ॥

मन्त्रराजस्य सामर्थ्यं प्रत्यक्षं वा भविष्यति ।
सर्वसिद्धिमहाधेनोर्वत्सलो ह्यतिवत्सलः ॥ 131 ॥

रते सुरते नित्यक्लिन्ने मदद्रवे सुखेन सुखयोने सुबले विह्वले लिङ्गवज्रं ग्रस ग्रस ह ह ह अँ अँ अँ मम सर्वसत्त्वानां सर्वसिद्धिं देहि देहि सः ॥ 132 ॥

ततः प्रथमाक्षरं दत्त्वा सुरतान्तं समुच्चरेत् ।
द्वितीयाक्षरमादाय द्रवान्तं च समुच्चरेत् ॥ 133 ॥

तृतीयाक्षरमुद्गीर्य सुखयोन्यन्तं सुभण्यते ।
चतुर्थाक्षरमादाय विह्वलान्तं प्रगीयते ।
पञ्चमं च समुच्चार्य लिङ्गवज्रादिकं पठेत् ॥ 134 ॥

[1]रते सुरते एँ नित्यक्लिन्ने मदद्रवे वीं सुखेन सुखयोने रीँ सुबले विह्वले रँ लिङ्गवज्रं ब्रीं ग्रस ग्रस ह ह ह अँ अँ अँ मम सर्वसत्त्वानां सर्वसिद्धिं देहि देहि सः ॥ 135 ॥

मन्त्रोऽयं वलिदानेऽपि पठ्यते ।
निरंशुमालिका श्रेष्ठा मञ्जिष्ठादिसुरञ्जिता ।
प्रवालमालिका पुत्रजीविना ग्रथिता तथा ॥ 136 ॥

रक्तचन्दनवृक्षस्य फलैर्वा रचिता प्रिया ।
शतमष्टोत्तरं कृत्वा रचेन्मालिकां विधानतः ॥ 137 ॥

[अयं] योगवरेण्यस्य योगीन्द्रस्य तथा स्त्रियः ।
करणीयः सदाचारो ज्ञेयः सिद्धविधौ स्थितः ॥ 138 ॥

स(स्व)कं शङ्केन्न वा भावं कर्तव्यो दिच (कर्तव्यं दिव्य)लक्षणम् ।
सर्वसिद्धिविधौ ज्ञेयं सर्वज्ञेन यथोदितम् ॥ 139 ॥

श्वासलाभो भवेन्मासे षण्मासे वाञ्छितं फलम् ।
ऋद्धिसिद्धिर्भवेदब्दे वश्याकृष्टिपुरःसरा ॥ 140 ॥

---

1 वस्तुतः मन्त्र का स्वरूप इस प्रकार होना चाहिये—

एँ रते सुरते आँ नित्यक्लिन्ने मदद्रवे रीँ सुखेन सुखयोने रँ सुबले विह्वले ब्रीं लिङ्गवज्र ग्रस ग्रस ह ह ह अँ अँ अँ मम सर्वसत्त्वानां सर्वसिद्धिं देहि देहि सः ।

किङ्करीभूय सेवन्ते सदेवासुरमानुषाः ।
उर्वश्यादिमुखाः सर्वे मर्त्यस्थानां तु का कथा ॥ 141 ॥

सदाऽभ्यासरतैः सम्यक् पूर्णे द्वादशवत्सरे ।
महामुद्रापदारूढः सिद्धो भवति साधकः ॥ 142 ॥

स्मृत्वा यथोदितं पूर्वमभ्यसेत् तदनन्तरम् ।
अयथाकृत आरम्भो देवीक्षोभः पतिष्यति ॥ 143 ॥

अधिगम्यागमात् सर्वमगमद् रागसंकटम् ।
गुरुपादं विना वत्स मा गच्छ योगिनीनयम् ॥ 144 ॥

यदि चन्द्रस्तथा सूर्यो भूमौ पतति शीर्यते ।
तथापि लोकनाथस्य नेदं वचो मृषा भवेत् ॥ 145 ॥

गुह्योद्भूतनरो धर्मः सर्वसिद्धिनिधानकः ।
करुणाकरनाथेन कृपया देशितो मम ॥ 146 ॥

यथैव मत्तमातङ्गो गुरुभिर्जलिकादिभिः ।
प्रवशीक्रियते विज्ञैर्विज्ञानं च महोदयैः ॥ 147 ॥

यथा महौषधं किञ्चित् सुस्वादं व्याधिघातकम् ।
प्रज्ञोपायसुखं तद्वद्धेलया क्लेशनाशनम् ॥ 148 ॥

सर्वस्य रमणी रम्या रागिणां शुद्धरागिणाम् ।
एकस्य गलपाशः स्यादपरस्य बन्धकर्तिका ॥ 149 ॥

अहो उपायसामर्थ्यं महायानानुयायिनाम् ।
कामिनीं गाढमालिङ्ग्य भुञ्जन्ति मकरध्वजम् ॥ 150 ॥

रसाश(रस)स्यांशो व्याधिर्विविधधनकामैकफलदः
सदा सत्त्वारामा रमणसहजानन्दमुदिता ।
तद्(तो) भूयो भूयो भुवनसुखसन्तुष्टमनसो
विनाक्लेशापाशो(यासं) जगदखिलमाप्नोति तथताम् ॥ 151 ॥

**इति गुह्यसमयतन्त्रे महायोगिनीजालतन्त्रे श्रीमल्लोकनाथपादेन देशितं योगिनीसर्वस्वं नाम गुह्यवज्रविलासिनीसाधनं समाप्तम् ॥**

**कृतिरियं सिद्धाचार्यशबरपादानाम् ॥**

●

## पञ्चाकार एवं पञ्चाकाराभिसम्बोधि

अभिसम्बोधि चार प्रकार की होती है, जैसा कि सेकोद्देशटीका में बताया गया है—

एकक्षण-पञ्चाकार-विंशत्याकार-मायाजालाभिसम्बोधिलक्षणम्। तत्र गर्भजोत्पत्तिक्रमेण मातापित्रोरुभयबिन्दुसमरसीभूतस्य मातृगुह्यचक्र उत्पित्सोरालयविज्ञानस्य यैकक्षणं केवलसुखसंवित्तिः, कायश्च रोहितमत्स्यवदेकाकारः **सैकक्षणाभिसम्बोधिः**।

यदा तु गर्भगतस्यैव रूपादिवासनात्मकपञ्चज्ञानसंवित्तिः कूर्मवद्विनिःसृतपञ्चस्फोटकाकारस्तदा **पञ्चाकाराभिसम्बोधिः**।

ततः प्रतिस्वं पञ्चज्ञानानां यदा पृथिव्यादिचतुर्धातुवासनाभेदः कायोऽपि विंशत्यङ्गुलोपरिपूर्णस्तदा **विंशत्याकाराभिसम्बोधिः**।

ततो गर्भाद्विनिःसृतो मायाजालवदनन्तभावसंवित्ति**र्मायाजालाभिसम्बोधिः**।
( से० टी०, पृ० 6 )

इसी प्रकार कालचक्रटीका विमलप्रभा में भी यह वर्णित है—

इहैकक्षणाभिसम्बोधिर्नाम परमाक्षरमहासुखक्षण इति।... एवमेकक्षणाभिसम्बुद्धो ज्ञानवज्रः सर्वार्थदर्शी, पञ्चकाराभिसम्बुद्धश्चित्तवज्रः परमाक्षरसुखः, विंशत्याकारसम्बुद्धो वाग्वज्रो द्वादशाकारसत्यार्थः सर्वसत्त्वरुतैर्धर्मदेशकः, मायाजालाभिसम्बुद्धः कायवज्रः षोडशाकारतत्त्वविदनन्तमायाजालैः स्फारितकाय इति।
( वि० प्र०, भा० 1, पृ० 45 )

वस्तुतस्तु "पञ्चबुद्धात्मकं जगत्" इस वाक्य के अनुसार हेतुफलात्मक भवनिर्वाणैकरसता मात्र ही जगत् है, इसका प्रतिपादन करने के लिये पञ्चबुद्धों में किस बुद्ध का जगत् के किस पदार्थ से सम्बन्ध है, उनका स्वरूप, मुद्रा आदि क्या-क्या हैं, यह सब दिखाने के लिये **पञ्चाकाराभिसम्बोधि** ग्रन्थ की रचना हुई है, इसी विषय को अद्वयवज्र ने अपने **पञ्चाकार** ( पृ० 40-4 ) नामक ग्रन्थ में प्रतिपादित किया है। हमें इस विषय की अन्य दो पाण्डुलिपियाँ उपलब्ध हुई हैं—1. **भट्ट रत्नाकर** कृत **पञ्चाकार** और 2. अज्ञात लेखक की **पञ्चाकाराभिसम्बोधि**। उपयोगी समझ कर हम 'धीः' में इन्हें केवल परिचय न देकर पूर्ण रूप से प्रकाशित कर रहे हैं।

### पञ्चाकारः

**ग्रन्थ**—पञ्चाकारः
**ग्रन्थकार**—भट्ट रत्नाकर
**संख्या—1–1697**

**पत्र संख्या**—2, **पंक्ति प्र० पत्र**-5, **अक्षर प्र० पं०**-47
**आधार**—तालपत्र, **लिपि**—नेवारी, **अपूर्ण**।

**विवरण**—

यह ग्रन्थ राष्ट्रीय अभिलेखालय, काठमांडू से प्राप्त हुआ है। पञ्चाकार और पञ्चाकाराभिसम्बोधि एक ही साथ लिखे गये हैं। यह अपूर्ण है, प्रारम्भ के 3 श्लोक नहीं हैं। इसकी एक प्रति डॉ० ठाकुरसेन नेगी से उपलब्ध हुई है, जो उन्होंने मनवज्र वज्राचार्य के संग्रह से जीराक्स कराई है। यह उपर्युक्त ग्रन्थ की ही कापी है, किन्तु देवनागरी में है। प्रारम्भ के तीन श्लोक इसमें भी नहीं हैं।

## पञ्चाकारः

॥ 1 ॥
॥ 2 ॥
॥ 3 ॥

नासागन्धटवर्गतोयलवणकण्ठावली शौष्वत (?)
प्रावृड् रत्नकुलं च रार्गपिशुनो मौलाभिषेको रजः।
रेखावेदनवेदनाचयचलच्चामीकराभश्चिरं
सूर्ये त्रांकृतिजो ददातु मणिभृद्यात्मतूयो(त्रितुर्या)धरम् ॥ 4 ॥

संज्ञाकल्लोलवंशो रसकुलिशरसो रागदम्भोलिसेकः
संज्ञास्कन्धाम्लजः कुसुमसमयस्तादिदन्ती हकारः।
जिह्वावेक्षासरोजध्वजकमलकुलं तुर्यधामाऽप्रदोषं
रक्तो हीःकारजन्यामितरुचिरवताद् ब्रध्नधामा समाधिम् ॥ 5 ॥

संस्कारस्कन्धकायः कटुहरितहयग्रीष्मसंस्कार ईर्ष्या
कृत्यानुष्ठानखड्गध्वजरजककुलक्रव्यकाञ्चोनिशीथः ।
स्पर्शाकारः पवर्गः ब(प)वनरयरणद्वज्रघण्टाभिषेकः
सूर्ये खँकारजन्मा भयमभयकरोऽमोघसिद्धिर्हरीतात् ॥ 6 ॥

सद्यः कर्पूर[शुभ्र]द्युतिरसविलसद्वज्रघण्टाभिरामः
सोपक्लेशप्रदेशप्रभवसुसमयः शेषणाति(?) कषायः।

आप्रत्यूषोपधानीमतिशिशिरमिलद्भूतिषष्ठाभिषेको
वादः श्रीधर्मधातुः श्रियमभितनुतां हूंभवो वज्रसत्त्वः ॥ 7 ॥

लांकारबीजोद्भवचक्रचिह्ना पीयूषरोचिर्धरणीस्वभावा ।
चन्द्रानुमा मोहनमोहशुद्धा मैत्रीमयी तव हिताय च लोचनाऽस्तु ॥ 8 ॥

अब्धातुः करुणाधिष्ठा कृष्णा मांकारजातका ।
मामकी साधयेद् द्वेषकुलिशेनाशु चन्द्रमाः ॥ 9 ॥

चन्द्रस्था पद्मिनी रक्ता तेजोधातुस्वरूपिणी ।
मुदितासंभवा शुद्धरागछि ............ पाण्डरा ॥ 10 ॥

श्यामा समीरशुद्धा शुद्धेर्ष्या नीलनीरजं दधती ।
हस्तपक्षा परमा तारा तांकारजा मारभञ्जनी ॥ 11 ॥

शशभृदि ................................. हार वंभवा पीता ।
शुद्धं तु पिशुनभावं दिशतात् त्वयि वज्रिणी समणिः ॥ 12 ॥

तादात्म्येन च लोचनाप्रभृतयो बुद्धादिभिः पञ्चभि–
र्मुद्रयन्ते निजमुद्रया पुनरमी द्वेषेण बुद्धादयः ।
द्वेषो वज्रधरेण शाश्वतभिदा तेनाप्यसौ वज्रधृक्
तेनेदं युगनद्धशुद्धमधुना तद्विद्धि विश्वं गुरोः ॥ 13 ॥

**पञ्चाकार**मिमं कृत्वा **भट्टरत्नाकरः** कृती ।
संलेभे यत्कृतं भूरि तेन लोकोऽस्तु वज्रधृक् ॥ 14 ॥

**इति पञ्चाकारः समाप्तः ॥**

## पञ्चाकाराभिसम्बोधिः

**ग्रन्थ**—पञ्चाकाराभिसम्बोधिः

**संख्या**—1/1697$\frac{5}{0}$

**पत्र संख्या**—18, **पंक्ति प्र० प०**–5, **अक्षर प्र० प०**–44

**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण** ।

नमो बुद्धाय

प्रणम्य पञ्चबुद्धान् योगिनीश्चापि भक्तितः।
पञ्चाकारमहं वक्ष्य आत्मनः स्मरणाय च ॥

ॐ स्वभावशुद्धाः सर्वधर्माः स्वभावशुद्धोऽहम्। ॐ योगविशुद्धाः सर्वधर्मा योगविशुद्धोऽहम्। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्।

वज्रसत्त्वो भवेद्बिन्दुरर्धेन्दुर्वैरोचनो मतः।
रेखा रत्नाधिपस्यै(श्चै)व हकारोऽमिताभ उच्यते ॥
ॐकारोऽमोघसिद्धिस्तु पञ्चबुद्धात्मकं जगत् ॥

पूर्वे वैरोचनः। शुक्लवर्णः, चक्रचिह्नः, रूपस्कन्धः, रत्नकुलः, महाचीनक्रमः, मानविशुद्धिः, आदर्शज्ञानवान्, वज्राभिषेकः, सूर्यमण्डली, वरदमुद्रा, अस्य बीजं 'अं'।

दक्षिणे रत्नसंभवः। पीतवर्णः, रत्नचिह्नः, वेदनास्कन्धः, रत्नकुलः, सूर्यमण्डली, समताज्ञानवान्, वरदमुद्राधरः, अस्य बीजं 'त्रां'।

पश्चिमेऽमिताभः। रक्तवर्णः, पद्मचिह्नः, संज्ञास्कन्धः, उत्पत्तिक्रमः, रागविशुद्धिः, प्रत्यवेक्षणाज्ञानम्, वज्राभिषेकः, सूर्यमण्डली, समाधिमुद्रान्वितः, अस्य बीजं 'ह्रीं'।

उत्तरेऽमोघसिद्धिः। हरितवर्णः, खड्गचिह्नः, संस्थाकारस्कन्धः, कर्मकुलः, विश्ववज्रक्रमः ईर्ष्याविशुद्धिः, [ कृत्या ]नुष्ठानज्ञानम्, घण्टाभिषेकः, सूर्यमण्डली, अभयमुद्रान्वितः, अस्य बीजं 'खं'।

मध्येऽक्षोभ्यः। कृष्णवर्णः, विज्ञानस्कन्धः, चक्रसत्त्वक्रमः, द्वेषविशुद्धः, सुविशुद्धधर्मधातुज्ञानम्, उदकाभिषेकः, सूर्यमण्डली, भूस्पर्शमुद्रान्वितः, अस्य बीजं 'हूँ'।

योगिनीनां वर्णचिह्नानि कथ्यन्ते --

अग्निदिशि लोचना। शुक्लवर्णा, पृथ्वोधातुस्वरूपिणी, मोहविशुद्धा, तथागतकुलोद्भवा, मैत्रीविहारिणी, वामे चक्रधरा, दक्षिणे वरदा, चन्द्रमण्डलिनी, अस्या बीजं 'लां'। ॐ...... ....ज्वल तिष्ठ सिद्ध मारण(णि) सर्वार्थसाधनि मम शान्ति कुरु स्वाहा।

नैर्ऋत्ये मामकी देवी। कृष्णवर्णा, अब्धातुस्वरूपिणी, द्वेषविशुद्धा, वज्रकुलोद्भवा, करुणाविहारिणी, वामे वज्रधरा, दक्षिणे वरदा, चन्द्रमण्डलिनी, अस्या बीजं 'मां'। ॐ संस्कारशान्तिकरे घुट घुट घुटिनी घोटय-घोटय घुटिनी ··············· स्वाहा।

वायव्ये पाण्डरा। रक्तवर्णा, तेजोधातुस्वरूपिणी, वाचा विशुद्धा, अमिताभ-कुलोद्भवा, [मुदिताविहारिणी,] वामे पद्मचिह्ना, दक्षिणे वरदा, चन्द्रमण्डलिनी, अस्याः बीजं 'पां'। ॐ कट विकट निकट कष्टं कर कपाट स्वाहा।

ऐशान्यां तारणी। श्यामवर्णा, वायुधातुस्वरूपिणी, ईर्ष्याविशुद्धा, अमोघसिद्धि-कुलोद्भवा, उपेक्षाविहारिणी, वामे उत्पलधरा, दक्षिणे वरदा, चन्द्रमण्डलिनी, अस्याः बीजं 'तां'। ॐ तारे तुत्तारे स्वाहा।

मध्ये वज्रधात्वीश्वरी। गगनवर्णा, गगनस्वभावा, रत्नसंभवकुलोद्भवा, सूर्य-मण्डलिनी, वामे पद्मधरा, धर्मधातुचिह्नपञ्चसूचिकवज्रधरा, दक्षिणे वरदा, अस्याः बीजं 'धां'। ॐ प्रज्ञे महाप्रज्ञे श्रुतिस्मृति········स्वाहा।

विड् वैरोचनः, मूत्रे अक्षोभ्यः, रक्ते रत्नसंभवः, शुक्रे अमिताभः, मांसे अमोघसिद्धिः।

रूपशब्दगन्धरसस्पर्शधातुषु—[रूपे वैरोचनः, शब्देऽक्षोभ्यः], गन्धे रत्नसंभवः, रसेऽमिताभः, कायेऽमोघसिद्धिः, धर्मधातुर्वज्रसत्त्वः।

चक्षुःश्रोत्रघ्राणजिह्वाकायमनःस्विति—चक्षुषोर्वैरोचनः, श्रोत्रयोरक्षोभ्यः, घ्राणे रत्नसंभवः, जिह्वायाममिताभः, कायेऽमोघसिद्धिः, मनसि वज्रसत्त्वः।

चक्षुर्विज्ञाने रूपवज्रा, श्रोत्रविज्ञाने शब्दवज्रा, घ्राणविज्ञाने गन्धवज्रा, जिह्वा-विज्ञाने रसवज्रा, कायविज्ञाने स्पर्शवज्रा, मनोविज्ञाने धर्मधातुवज्रा।

अङ्गन्यासस्तु कथ्यते—ॐ कारे चक्षुः, हूँकारे श्रोत्रम्, डांकारे घ्राणः, ह्रींकारे जिह्वा, खंकारे कायः, वंकारे शिरः। चक्षुर्भ्यां क्षितिगर्भः, श्रोत्रयोर्वज्रपाणिः, घ्राणयोः खगर्भः, जिह्वायां लोकेश्वरः, काये सर्वनीवरणविष्कम्भी, मनसि समन्तभद्रः।

पूर्वे यमान्तकः। कृष्णवर्णः, महिषारूढः, वज्राङ्कुशगृहीतहस्तः, वज्रडाकिनी-समापन्नः, सूर्यमण्डली, अस्य बीजं 'हूँ'।

दक्षिणे प्रज्ञान्तकः। सितवर्णः, सिंहारूढः, वज्रपाशगृहीतहस्तः, वज्रनखीसमापन्नः, सूर्यमण्डली, अस्य बीजं 'हूँ'।

पश्चिमे पद्मान्तकः। रक्तवर्णः, व्याघ्रारूढः, वज्रघण्टागृहीतहस्तः, अपराजितासमापन्नः, सूर्यमण्डली, अस्य बीजं 'हूँ'।

उत्तरे विघ्नान्तकः। नीलवर्णः, वृषारूढः, वज्रपरशुगृहीतहस्तः, वज्रवेतालीसमापन्नः, सूर्यमण्डली। अस्य बीजं 'हूँ'।

चतुस्तथागतविशुद्धाश्चत्वारः क्रोधाः।

इदानीं धात्वायतनानि कथ्यन्ते—पृथ्वी कठिना, रूढत्वधारणं कर्म, अस्थि-अन्त्र-नहरु-दन्त-त्वच-केश-रोम-नखा इत्यादि पृथ्वीधातुः।

अब्धातुः, द्रव [रूपं]··· संग्रहकर्म, तडागोदकम्, नद्युदकम्, श्लेष्मोदकम्, सिंघाणोदकम्, अक्षिजलम्, मूत्रजलमित्यादि।

तेजो धातुः। नाभ्युष्णम्, हृदयोष्णम्, सर्वाङ्गोष्णम्, संशोषणम्, उष्णत्वम्, कर्मशोषणत्वम्, परिपाचनत्वम्, लघुत्वमिति तेजो धातुः।

आकुञ्चनम्, प्रसारणम्, गमनागमनम्, निःश्वासः, उच्छ्वासः, उद्वाहः, प्रवाहः, निर्वाहः, संवाहः, कूर्मः, कृकरः, नरदत्तः, धनञ्जय इत्यादि वायुधातुः।

शून्यव्यापकं कथं ग्राह्यग्राहकादीनामाकाशधातुः, एते योगिनां च तथागतानाम्। रसायनं कथ्यते—तिक्ते अक्षोभ्यः, मधुरे वैरोचनः, लवणे रत्नसंभवः, अम्लेऽमिताभः, कटुके अमोघसिद्धिः, कषाये वज्रसत्त्वः।

कवर्गे वैरोचनः, चवर्गे अक्षोभ्यः, टवर्गे रत्नसंभवः, तवर्गे अमिताभः, पवर्गे अमोघसिद्धिः, यवर्गे वज्रसत्त्वः। इमानि व्यञ्जनानि भवन्ति।

अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः देवीनां बीजानीमे स्वरा भवन्ति। अकारादि प्रज्ञा।

वैरोचनोऽक्षोभ्येण मुद्रयेत्, अक्षोभ्यो वज्रसत्त्वेन मुद्रयेत्। वज्रसत्त्वः केन मुद्रयते, पितापुत्रन्यायेनाक्षोभ्यो न मुद्रयते, अपरतथागतानामक्षोभ्य एव नायकः।

दिनभेदस्तु कथ्यते—प्रत्यूषे वैरोचनः, मध्याह्ने अक्षोभ्यः, प्रहरत्रये रत्नसंभवः, अपराह्णेऽमिताभः, अर्द्धरात्रौ अमोघसिद्धिः, तृतीयप्रहरादि प्रत्यूषं यावद् वज्रसत्त्वः। दिवा वज्रसत्त्वः, निशि प्रज्ञा।

शरद्यक्षोभ्यः, हेमन्ते वैरोचनः, प्रावृषि रत्नसंभवः, वसन्तेऽमिताभः, ग्रीष्मेऽमोघसिद्धिः, शिशिरे वज्रसत्त्वः। धर्मे धाता वज्रसत्त्वः, ज्ञाने वज्रसत्त्वः, चित्ते वज्रसत्त्वः, सर्वत्रैलोक्यामेकार्थवज्रसत्त्वः प्रशस्यते।

पञ्चाकारात्मकं सर्वं त्रैलोक्यं सचराचरम्।
यद्यपि बाह्यनिर्विकल्पमयं दृश्यते जगत्॥

पञ्चस्कन्धस्वभावेन पञ्चबुद्धाः प्रकीर्तिताः।
पञ्चावरणनिर्मुक्ताः स्कन्धगाः पञ्चकौलिकाः॥

कानि पञ्चावरणानि ज्ञेयानि?

क्लेशजन्मकर्मज्ञानाज्ञानं तथैव च।
पञ्चावरणानि चैतानि कथितानि तथागतैः॥

एवं विमृष्यमाणो हि भावयेत् सततं सुधीः।
प्राप्नोति चाग्रजां बोधिं सम्यक्संबुद्धभाषितम्॥

**इति पञ्चाकाराभिसंबोधिः समाप्तः॥**

# तांत्रिक बौद्ध मुद्रा :
## चर्यापदों के विशेष सन्दर्भ में

—नागेन्द्रनाथ उपाध्याय—

[ इस शोध-पत्र की अपनी सीमाएँ हैं। मुद्रा के सम्बन्ध में हिन्दू और बौद्ध तंत्रों की अपनी-अपनी धारणाएँ हैं। उनसे सम्बन्धित कुछ सूचनाओं का संग्रह कर उनका विश्लेषण इस निबन्ध में किया गया है। यद्यपि मुद्रा के कुछ प्रतीकार्थों का उल्लेख किया गया है, तथापि दार्शनिक विवेचन को यहाँ इस समय छोड़ दिया गया है। मुद्रा का सीधा सम्बन्ध साधना से है। साधना अधिकांश गुरुगम्य है। इसलिए इस प्रकरण को यहाँ उठाया नहीं गया है। हिन्दू और बौद्ध मुद्रा के इस विवरण से कुछ तुलनात्मक निष्कर्ष भी निकालने की कोशिश की गई है। ]

**भारतीय साधना में मुद्रा**

भारतीय साधना में अधिकार भेद का महत्त्व सर्वज्ञात है। व्यक्ति अथवा साधक के गुण, प्रकृति, योग्यता और संस्कार के आधार पर इसका निश्चय किया जाता है। व्यक्ति अथवा साधक की शारीरिक क्रियाओं से पंचतत्त्वों अथवा पंचमकारों का सीधा सम्बन्ध है तथा साथ ही ये शारीरिक क्रियाएँ व्यक्ति के अधिकार से मूलतः सम्बन्धित हैं। पंचमकारों में सामान्यतया मद्य, मांस, मत्स्य, मुद्रा और मैथुन की गणना की जाती है। कुलार्णवतंत्र में इनकी इस प्रकार परिगणना की गई है—

मद्यं मांसं च मत्स्यं च मुद्रा मैथुनमेव च।
मकारपञ्चकं देवि देवताप्रीतिकारकम् ॥[1]

इससे स्पष्ट है कि इनका प्रयोग देवता की प्रीति के लिए किया जाना चाहिए। हिन्दू तन्त्रों में मुद्रा के विषय में कहा गया है—

भूर्ज( ?भृष्ट )धान्याधिकं यद्यच्चर्वणीयं प्रचक्षते।
सा मुद्रा कथिता देवि सर्वेषां नगनन्दिनि ॥[2]

किन्तु पंचमकारों के लिए भिन्न-भिन्न प्रकार के नाम भी मिलते हैं। पंचमकारों को पंचतत्त्व, कुलद्रव्य, कुलतत्त्व आदि भी कहा जाता है। इनके कुछ विशिष्ट साधनात्मक नाम भी

1. कुलार्णव तंत्र, उल्लास 8, श्लोक 8
2. योगिनीतंत्र, पटल 6, श्लोक 36cd-37ab; पृ० 42

मिलते हैं, जैसे—मद्य के लिए कारणवारि अथवा तीर्थवारि। इसी प्रकार पंचम तत्त्व मैथुन के लिए लतासाधन शब्द का भी प्रयोग मिलता है। इनके अर्थ गुणात्मक साधनों के अनुसार भिन्न-भिन्न बताये जाते हैं। हिन्दू तन्त्रों में पश्वाचार तामसिक है, वीराचार राजसिक है और दिव्याचार सात्त्विक साधन है। साधन में इन पंचमकारों का प्रयोग शुद्धि के उपरांत ही विहित है, और वह भी साधक की योग्यता को ध्यान में रखते हुए ही निर्दिष्ट है। सर्वाधिक आलोच्य तो वीर साधन ही है। इसलिए वीर के लिए योग्यता का निर्देश अवश्य ही ध्यान देने योग्य है। उसे जितेन्द्रिय, सत्यवादी, नित्यानुष्ठानतत्पर, कामादि का बलिदानी होना चाहिए। इसी प्रकार सभी मकार अपने अभिधेयार्थ में सभी साधकों के लिए विहित नहीं हैं। पशु साधक के लिए मद्य अपेय, अदेय और अग्राह्य है। साधनेतर कार्यों के लिए मद्य का प्रयोग प्रायश्चित्त-कारक है। इसी प्रकार अन्य मकारों के विषय में भी समझा जा सकता है। इनके प्रयोग के सम्बन्ध में जो निर्देश तंत्र-ग्रन्थों में मिलते हैं, वे साधक के जीवन और आचार को नियंत्रित करते हैं। इतना ही नहीं, ये अग्रसर साधक-जीवन को निरुपद्रव भी करते हैं। इसी लिए मद्यादि मकारों से सम्बन्धित इन निर्देशों को अवश्य ही परवर्ती विवेचन के लिए ध्यान में रखना आवश्यक प्रतीत होता है—

वृथापानं तु देवेशि सुरापानं तदुच्यते।
तन्महापातकं ज्ञेयं वेदादिषु निरूपितम्॥[1]

इसी प्रकार विधिरहित प्रयोग का भी निषेध किया गया है[2]। इन सारे विधानों अथवा इनसे सम्बन्धित विवरणों को बौद्ध मुद्रा की भूमिका मात्र के लिए ही प्रस्तुत किया गया है।

इसी भूमिका के लिए अबौद्ध स्रोतों में प्राप्त मुद्रा के स्वरूप पर भी थोड़ा विचार कर लेना चाहिए। ऊपर एक उद्धरण में मुद्रा को "देवताप्रीतिकारक" कहा गया है। मुद्रा मोहन और द्रावण करती है। आवाहनादि में भी इसका प्रयोग बताया गया है। इसका दृष्ट स्वरूप नाना रूपों में, अंगुलियों के प्रग्रथन के रूप में देखा जा सकता है[3]। शारदातिलक में आवाहनादि के लिए भी मुद्रा बताई गई है। इनकी रचना से सभी देवता मोद को प्राप्त करते हैं। आवाहनी, अधोमुखी आदि मुद्राओं के वर्णन मिलते हैं। राघवभट्ट की पदार्थादर्शटीका में मुद्रा शब्द की व्याख्या में कहा गया है—

1. कुलार्णवतंत्र, उल्लास 2, श्लोक 123; महानिर्वाणतंत्र, उल्लास 6, श्लोक 11-16

2. वहीं, उल्लास 2, श्लोक 134-135

3. परशुरामकल्पसूत्र, ज्ञानकाण्ड, पृ० 134-136, इस ग्रन्थ के परिशिष्ट 6 में अनेक प्रसिद्ध मुद्राओं को चित्रों से प्रदर्शित किया गया है।

रा दाने, मुदं राति ददाति मुद्रेति निर्वचनम् । इदमेव "मोदन्ते सर्वदेवताः" इत्यनेन सूचितम् । अत एव तद्दर्शनेन देवताहर्षोत्पत्तिः ।

यह भी व्याख्यात है कि अंगुष्ठादि पाँचों अंगुलियाँ पंचभूतात्मक हैं । इन भिन्न-भिन्न अंगुलियों के स्पर्श मात्र से विविध देवता प्रगुणीभावपूर्वक मोद को प्राप्त करते हैं । कनिष्ठिका के क्रम से पृथ्वी आदि भूततत्त्वों की कल्पना की गई है । अर्चना, जप, ध्यान आदि में भिन्न-भिन्न मुद्राओं का विधान मिलता है[1] । महानिर्वाणतंत्र में उत्तमादि भेद से मुद्रा तीन प्रकार की बताई गई है । चन्द्रबिम्ब के समान शुभ्र तथा शालि-तण्डुलादि अथवा जौ, गोधूम आदि से बनी और घृत में पकी मुद्रा उत्तम कही जाती है भृष्ट धान्यादि से निर्मित मुद्रा मध्या और भुने हुए तथा अन्य बीजों से निर्मित मुद्रा अधमा कही जाती है । इससे स्पष्ट है कि देवता को अर्पित की जाने वाली अन्नादि से निर्मित वस्तुएँ भी मुद्रा कही जाती हैं[2] । पंचमकारों ( मद्य, मांस, मत्स्य, मुद्रा और मैथुन ) में मुद्रा चतुर्थ है । भूमि से उत्पन्न एवं सुलभ, जीवों के जीवन और तीनों जगत् की आयु का मूल यह चतुर्थ तत्त्व मुद्रा है[3] । इसे मुक्तिदायिनी भी कहा गया है । मुद्रा का दिव्य भावोचित अर्थ भी मिलता है, जिसके अनुसार सहस्रार में कुण्डलिनी युक्त आत्मा का ध्यान करना ही मुद्रा है, किन्तु वीर भाव में मुद्रा अन्ननिर्मित पदार्थ के रूप में स्वीकृत होकर चर्वण के रूप में मद्य के साथ भोज्य विहित है । इसी प्रकार मांस और मत्स्य भी पौष्टिक हैं, क्योंकि ये सभी मद्य के विष की शांति करते हैं ।

इस प्रकार मुद्रा अंगुलियों की विविध क्रियाएँ और स्थितियाँ हैं । वह विविध प्रकार के पक्वान्न भी हैं । प्रथम अर्थ में मुद्रा आवाहनादि के कार्यों में प्रयुक्त होकर देवताप्रीतिकारक है, और दूसरे अर्थ में मोदकारक होने के साथ ही वह पौष्टिक भी है । तीसरे अर्थ में दिव्यभावापन्ना मुद्रा कुण्डलिनी संयुक्त आत्मा का सहस्रार में ध्यान है । प्रथम अर्थ की मुद्राओं का प्रयोग प्रतिष्ठा, स्नान, आवाहनादि, नैवेद्य, विसर्जन आदि में होता है । यह देवता को प्रसन्न करने वाली है । दूसरे प्रकार की मुद्रा प्रत्यक्ष रूप में साधक को और परोक्ष रूप में देवता को प्रसन्न करने वाली है और तीसरे प्रकार की मुद्रा साधक को मोद प्रदान करने वाली है, किन्तु सभी मुद्राएँ मोद प्रदान करने के गुणधर्म से सम्पन्न हैं । श्री माधव पुंडलीक पंडित ने तांत्रिक परम्परा से ही मुद्रा का भुना हुआ अन्न, धान्य (प्रत्यक्ष) चावल-धान ( अनुकल्प ), और बुराइयों से सम्बन्ध त्याग—इन तीन प्रकार के अर्थों अथवा प्रयोगों का उल्लेख किया है[4] ।

---

1. शारदातिलकतंत्र, पटल 23, श्लोक 106 से आगे तथा उनकी टीका पृ० 842 तथा आगे
2. म० नि० तं०, उल्लास 6, श्लोक 9-10 तथा टीका, पृ० 123
3. म० नि० तं०, उल्लास 6, श्लोक 107, पृ० 179.
4. तांत्रिक साधना पृ. 49

योग में भी मुद्राओं का महत्त्व कम नहीं है। इनसे स्थिरता आयत्त होती है। हठयोग के ग्रन्थों में विवेचित मुद्रा शरीर के अंगों की विविध स्थितियाँ हैं। ये रोगहारिणी, पुष्टिदा, मृत्युहारिणी होती हैं। ये अग्नि, जल और वायु से रक्षा करने वाली भी हैं। घेरण्डसंहिता, हठयोगप्रदीपिका आदि ग्रंथों में विविध मुद्राओं के विवरण उपलब्ध हैं, जिनमें प्रमुख हैं—योनिमुद्रा, काकिनीमुद्रा, अश्विनीमुद्रा आदि। घेरण्डसंहिता का तृतीय उपदेश इस दृष्टि से विशेष महत्त्वपूर्ण है। इनका सम्बन्ध आसनों से भी है। यहाँ केवल साधना सम्बन्धी मुद्राओं के विषय में यत्किंचित् विचार किया जा रहा है। नाट्यशास्त्र, नृत्यशास्त्र, मूर्तिविज्ञान आदि में भी मुद्राओं का विस्तार है, जो इस प्रस्तुत विषय से असंबद्ध है। साधना के क्षेत्र में मुद्रा देवताओं को मोद देने वाली तो है ही, यह आन्तरिक भाव का बाह्य व्यक्तीकरण भी है। अंगुलियों से बनी मुद्राओं ( जैसे—आवाहनमुद्रा, अवगुण्ठनमुद्रा, मत्स्य-मुद्रा, योनिमुद्रा ) आदि को आन्तरिक भावों की बाह्य अभिव्यक्ति ही मानना चाहिए[1]। शरीर के अवयवों के संचालन से बनी ये विशिष्ट भंगिमाएँ साधक के हृदय और मन के उद्देश्यों को प्रकाशित करती हैं और पुनरावृत्ति द्वारा भाव को शरीर के स्थूल तत्त्व में प्रतिष्ठित करती हैं। इस प्रकार मुद्रा वह भाषा है, जिसमें शरीर देवता से संलाप करता है[2]।

विभिन्न स्रोतों से प्राप्त विवरण के आधार पर मुद्रा के कुछ अन्य रूपों की ओर भी संकेत किया जा सकता है। कापालिकों के लक्षण-निरूपण के प्रसंग में भी मुद्रा का विवेचन मिलता है, जो उपर्युक्त मुद्राओं से भिन्न है। रामानुज के अनुसार कापालिक को मुद्रा-षट्क के मर्मार्थ का ज्ञाता होना चाहिए। ये मुद्राएँ हैं—कण्ठिका, रुचक, कुण्डल, शिखामणि, भस्म और यज्ञोपवीत। इनके धारण से पुनर्जन्म नहीं होता[3]। यामुनाचार्य ने दो उपमुद्राओं कपाल और खट्वाङ्ग की भी गणना की है। नाथपंथियों द्वारा कान में धारण किये जाने वाले कुण्डलों को भी मुद्रा कहा गया है, जो विभिन्न धातुओं या शृङ्गों के बने होते हैं[4]।

ऊपर हिन्दू परम्परा से प्राप्त मुद्रा की विभिन्न व्याख्याएँ प्रस्तुत की गई हैं। बौद्ध परम्परा की मुद्राओं की व्याख्याएँ यत्किंचित् भिन्न और विशिष्ट हैं। डॉ० शशिभूषण दास गुप्त ने व्यक्तभावानुगततत्त्वसिद्धि नामक हस्तलेख के आधार पर बताया है कि सहजात्मक बोधिचित्त से प्रसूत शरीरांगों की जो सहज विक्षेपयुक्त क्रियाएँ हैं, वे सभी मुद्राएँ हैं—

स्वभावशुद्धबोधिचित्ताद् ये खलु सहजविनिर्मिताङ्गविक्षेपास्ते सर्वे एव मुद्राकाराः[5]।

---

1. तांत्रिक साधना, पृ. 16–17
2. वहीं, पृ. 37
3. दि कापालिकज् एण्ड कालामुखज्, पृ. 2
4. वहीं, पृ. 2–3
5. इन्ट्रोडक्शन टु तांत्रिक बुद्धिज्म, पृ. 68-69

इस प्रकार मुद्रा स्पर्शविद्या के रहस्यों को सुरक्षित रखती है। जहाँ तक शारीरिक अंगों और अंगुलियों की मुद्राओं के उदय और विकास का प्रश्न है, बुद्ध के जीवन की विविध घटनाओं को संकेतित करने वाली मुद्राओं की ओर इङ्गित किया जा सकता है। डॉ० दासगुप्त ने "श्रीमच्छाक्यराज-सर्वदुर्गगतिपरिशोधन-मुखाख्यान-प्रथमादि-योग-नाम समाधि" नामक हस्तलेख में 150 मुद्राओं के सचित्र उल्लेख का संदर्भ दिया है, जिनमें से कुछ हाथों और अंगुलियों की विविध स्थितियाँ हैं, कुछ वज्र-पद्म-घण्टा आदि को धारण करने की विधियाँ हैं, तथा कुछ पुष्पार्पण, जलार्पण, दीपदान, वाद्यवादन आदि की मुद्राएँ हैं। ये सभी परम शुद्धि और दुःखनिवृत्ति करती हैं[1]। ये देवो-देवताओं की पूजा की विधियाँ हैं, मूर्तियों और चित्रों की निर्मिति को विधियाँ हैं, गाथाओं अथवा मन्त्रों के उच्चारण अथवा पाठ की विधियाँ हैं। यह भी स्पष्टतया कहा गया है कि ये सभी चित्त के उस प्रकृतिप्रभास्वर रूप के साक्षात्कार के लिए ही विहित हैं, जो शून्य है तथा इसके (मन्त्र, मुद्रा आदि के) माध्यम से वह संसार के धर्मों से एकात्मता प्राप्त करता है। शून्यता स्वभाव में इनका साक्षात्कार किये बिना इनका विनियोग निषिद्ध है। यही स्वाधिष्ठान है, जो सभी योगों का रहस्य है[2]।

हेवज्रतंत्र के अनुसार मुद्रा मोक्ष का हेतु है। इसकी व्याख्या योगरत्नमाला में कहा गया है कि वज्र अभेद्य ज्ञान है। उसके द्वारा हर्ष या महासुख उत्पन्न किया जाता है। इस लिए इसे मुद्रा कहते हैं[3]। इसी प्रकार हेवज्रतंत्र करस्फोट और अङ्गुल्यामोटन को भी मुद्रा कहता है[4]। डॉ० लोकेशचन्द्र और शारदा रानी ने जापानी मंत्रयान में प्राप्त हस्तमुद्राओं का सचित्र विवरण दिया है। जापान के विविध संग्रहालयों में सुरक्षित भारतीय बौद्ध ग्रन्थों के प्राचीन अनुवादों के आधार पर प्रस्तुत ये मुद्राएँ अंगुलियों और हाथ की विविध क्रियाओं, स्थितियों और आकृतियों को प्रस्तुत करती हैं[5]।

---

1. इंट्रोडक्शन टू तांत्रिक बुद्धिज्म, पृ. 69–70
2. वहीं, पृ. 80, 83, 93
3. हेवज्रतंत्र, I. v. 4

   मुद्राः पञ्चकुलानीति कथ्यते मोक्षहेतुना।
   वज्रेण मुद्रयतेऽनेन मुद्रा तेनाभिधीयते ॥
   टीका—"वज्रमभेद्यं ज्ञानं तेनानेन मुद्रयते, मुदं हर्षं महासुखं जन्यते, तेन हेतुना मुद्रेत्युच्यते।"
   (भाग 1, पृ. 117)
4. वहीं, I. v. 20

   करस्फोटो भवेन्मुद्रा अङ्गुल्यामोटनं तथा ।
   तद् ध्येयं चिन्तितं यच्च ध्येयं यस्माद् विचिन्तनम् ॥
5. मुद्राज इन जापान, लोकेशचन्द्र, शारदा रानी, 1978, प्रीफेस, पृ. 1–9

इन मुद्राओं के आध्यात्मिक प्रतीकार्थों की भी व्याख्या की गई है। गेट्टी ने वैरोचन की हस्तमुद्रा को अद्वय के रूप में निरूपित करते हुए स्पष्ट किया है कि पद्म से अथवा चन्द्र से उदित अग्निशिखा में अग्निशिखा पुरुष तत्त्व को और पद्म अथवा चन्द्र स्त्री तत्त्व को प्रतीकीकृत करते हैं। कलश से उदित अग्निशिखा भी इसी अर्थ को द्योतित करती है। अमृतपात्र से उदित अशोक शाखा से इसी अर्थ का द्योतन होता है। ध्यानी बुद्ध के रूप में वैरोचन जिस धर्मचक्रमुद्रा को धारण करते हैं, वह भी प्रज्ञा और धातुओं के अद्वय को संकेतित करती है[1]। आदि बुद्ध के रूप में वे षड्-धातुओं की मुद्रा को धारण करते हैं। बायें हाथ की तर्जनी को दाहिने हाथ की पाँचों अंगुलियों से ग्रहण किये जाने की इस मुद्रा में छहों अंगुलियाँ ६ भूतों को प्रतीकीकृत करती हैं और इस रूप में वे छह प्रकार के शारीरिक और मानसिक आनन्द का उत्पादन करती हैं। इन पाँचों से उन पंचभूतों ( पृथ्वी, अप्, तेज, वायु और आकाश ) की ओर संकेत होता है, जिससे यह मानव शरीर विनिर्मित है, जबकि बाँये हाथ की तर्जनी से वह मनस्तत्त्व प्रतीकीकृत होता है जो आदिबुद्ध का सारतत्त्वांश है। इसी प्रकार इस मुद्रा में दोनों हाथ अध्यात्म और अधिभूत तत्त्वों के समन्वय अथवा संयोग को द्योतित करते हैं, जिन्हें बौद्ध शब्दावली में वज्रधातु और गर्भधातु कहा जाता है और जो मण्डल की दोनों भुजाओं की ओर भी संकेत करते हैं[2]। हिन्दू-तंत्रों में भी इस प्रकार के विवरण मिलते हैं[3]।

बौद्ध तंत्रों में मुद्रा शब्द का एक विशिष्ट अर्थ में प्रयोग सर्वव्यापक और सर्वविदित है। योगी बोधिचित्त का प्रतीक है और योगिनी पूर्णप्रज्ञा का। इसी योगिनी को ज्ञानमुद्रा अथवा महामुद्रा अथवा सहजसुन्दरी भी कहा गया है। प्रज्ञा को बौद्ध तंत्रों में भगवती अथवा मुद्रा के रूप में स्वीकार किया गया है। यह वह शक्ति अथवा साधिका भी है, जिसे साधक साधन में अग्रसर होने के लिए स्वीकार करता है। इसे ही वज्रकन्या अथवा युवती भी कहते हैं। वह योनि का भी प्रतीक है[4]। हेरुकनिधान-पंजिका ( हस्तलेख ) में काय-वाक्-चित्त का मुद्रण करने के कारण मुद्रा को प्रमदा कहा गया है[5]।

---

1. द गॉड्स् ऑफ नॉर्दर्न बुद्धिज्म, पृ. 32
2. इं. तां. बु, पृ. 109-110
3. शारदातिलक की पदार्थादर्श टीका में भी इस प्रकार का प्रतीकात्मक विवेचन मिलता है—स्वाङ्गुल्यो हि पञ्चभूतात्मकाङ्गुष्ठाद्या आकाशवाय्वग्निसलिलभूरूपाः। तासां मिथःसंयोगरूपसंकेतात्मकोऽपि देवताप्रगुणीभावपूर्वको मोदः सान्निध्यकरो भवति। तदुक्तम्—

   पृथिव्यादीनि भूतानि कनिष्ठाद्याः क्रमान्मताः।
   तेषामन्योऽन्यसम्भेदप्रकारैस्तत्प्रपञ्चता ॥ पृ० 842
4. इ. तां. बु., पृ. 113–114
5. पत्र 3 a पर–"मुद्रा तु प्रमदा प्रोक्ता कायवाक्चित्तमुद्रणात्"।

तांत्रिक बौद्ध साधना में बिन्दुसाधन का व्यापक महत्त्व है। इसके लिए भी हठयोगगत मुद्राओं के प्रयोग का विधान है। यद्यपि विभिन्न ग्रंथों में मांसपेशियों और अंगों पर विशेष प्रकार के नियंत्रण के लिए इनका प्रयोग निर्दिष्ट है, तथापि अनेक प्रमुख एवं प्रसिद्ध वज्रोली, सहजोली, अमरोली आदि मुद्राएँ शुक्रनिरोध के लिए विशेष रूप से प्रसिद्ध हैं। विद्वानों का विचार है कि वज्रोली और सहजोली जैसी मुद्राएँ मूलतः बौद्ध तांत्रिक परम्परा में विकसित वज्रयान और सहजयान की मुद्राएँ हैं, जो कालान्तर में नाथों और हठयोगियों के साधन में किसी प्रकार प्रवेश कर गई, किन्तु हठयोग-प्रदीपिका जैसे ग्रन्थों में इनका ज्ञान मात्र ही विहित है, इनका प्रयोग ब्रह्मचर्यप्रधान साधन संप्रदाय होने के कारण निषिद्ध कर दिया गया है[1]। इन साधनों या मुद्राओं का विनियोग तांत्रिक बौद्धों में रहा होगा, क्योंकि प्राणायाम और नाड़ीसाधना का बृहत् प्रयोग तांत्रिक बौद्ध ग्रन्थों में भी मिलता है[2]।

तांत्रिक बौद्ध ग्रन्थों में मुद्रा का जो विवरण मिलता है, उससे उसके अनेक रूप प्रत्यक्ष होते हैं। हेवज्रतंत्र में मुद्रा और महामुद्रा के अनेक रूप और अर्थ मिलते हैं। उसके स्वरूप के विषय में कहा गया है कि वह प्रज्ञास्वभावा है। वह सुन्दर मुखवाली, विशालाक्षी, रूपयौवन-मण्डिता, नीलकमल के समान वर्णवाली और कृपावती है। उसे वज्रकन्या कहा गया है और उसे ही ग्रहण करने के लिए कहा गया है। हेवज्रतंत्र में वर्णित पंचमुद्राएँ कृष्णवर्णा, महारौद्रा, एकवक्त्रा, रक्तनेत्रा तथा हाथ में रुचक, कर्तरी, कपाल तथा कटि में मेखला धारण करने वाली बताई गई हैं। इनकी कटि व्याघ्रचर्म से आवृत रहती है। ये शवारूढ़ रहती हैं और अत्यन्त तेजोमय होती हैं। इनकी दो भुजाएँ होती हैं और ये पिंगल केशों वाली होती हैं। मुद्रा को गंधद्रव्य एवं कर्पूर से संयुक्त बताया गया है। वह देवता, असुर, मनुष्य, यक्ष, किन्नर किसी भी कोटि की हो, साधक उसे ग्रहण करे और चर्या करे। ऐसी मुद्रा सभी संकल्पों से वर्जित होती है। वह सुखावहा होती है उसके साथ साधक को गुरु के पास जाना चाहिए[3]।

इसी प्रकार महामुद्रा के स्वरूप का निरूपण करते हुए हेवज्रतंत्र में कहा गया है कि वह आदिरसस्वभावा एवं उत्पन्नक्रमयोग के अनुसार भगवती प्रज्ञा है। न तो वह दीर्घ है न ह्रस्व, न चतुरस्र है न वर्तुल। वह स्वादगन्ध-रसातीता है एवं सहजानन्दप्रदायिका है। वह न कृष्णा है न गौरी। वह पद्मपत्र के आकारवाली या वर्णवाली है। वह सुगन्धमयी है। उसका प्रस्वेद भी मृगनाभि के समान सुगन्धपूर्ण है। वह धीरा, अचंचला, प्रियवादिनी, मनोरमा, सुकेशी, त्रिवलीमध्या है। इसे ही प्राकृतजन पद्मिनी कहते हैं। ऐसी सहजानन्दरूपिणी मुद्रा को प्राप्त

1. नाथ संप्रदाय, पृ. 71–72, 125. 126.

2. बौद्ध कापालिक साधना और साहित्य, पृ० 194–197

3. हेवज्रतन्त्र, I. vi. 8-9, 16, 18, 21, II. iii. 16–18; बौ. का. सा. सा., पृ. 75–76

